अथ सूर्यनमस्कारश्लोकाः ॥

ॐ मेरुमन्दरसङ्काशं पीताम्बरधरं विभुम् ।
किरीटिनं पद्मनेत्रं भास्करं प्रणमाम्यहम् ॥

विनातनयो देवः कर्मसाक्षी सुरेश्वरः ।
सप्ताश्वः सप्तरज्जुश्च अरुणो मे प्रसीदतु ॥अरुणाय॥

रज्जुवेत्रकशापाणिं प्रसन्नं कश्यपात्मजम् ।
सर्वाभरणदीप्ताङ्गमरुणं प्रणमाम्यहम् ॥अरुणाय ॥

नमस्ते देवदेवेश नमस्ते धरणीधर ।
नमस्ते पद्महस्ताय नमस्ते वेदमूर्तये ॥भास्कराय॥

हंसाय भुवनध्वान्तध्वंसायामिततेजसे ।
हंसवाहनरूपाय भास्कराय नमोनमः॥

वेदाङ्गाय पतङ्गाय विहङ्गारूढगामिने ।
हरिद्वर्णतुरङ्गाय भास्कराय नमो नमः ॥
भुवनत्रयदीप्ताय भुक्तिमुक्तिप्रदायिने ।
भक्तदारिद्र्यनाशाय भास्कराय नमो नमः ॥
लोकालोकप्रकाशाय सर्वलोकैकचक्षुषे ।
लोकोत्तरचरित्राय भास्कराय नमो नमः ॥
सप्तलोकप्रकाशाय सप्तसप्तिरथाय च ।
सप्तद्वीपप्रकाशाय भास्कराय नमो नमः ॥
मार्तण्डाय द्युमणये भानवे चित्रभानवे ।
प्रभाकराय मित्राय भास्कराय नमो नमः ॥
नमस्ते कमलानाथ नमस्ते कमलप्रिय ।

नमः कमलहस्ताय भास्कराय नमो नमः॥
नमस्ते ब्रह्मरूपाय नमस्ते विष्णुरूपिणे ।
नमस्ते रुद्ररूपाय भास्कराय नमो नमः॥
सत्यज्ञानस्वरूपाय सहस्रकिरणाय च ।
गीर्वाणभीतिनाशाय भास्कराय नमो नमः॥
सर्वदुःखोपशान्ताय सर्वपापहराय च ।
सर्वव्याधिविनाशाय भास्कराय नमो नमः॥
सहस्रपत्रनेत्राय सहस्राक्षस्तुताय च ।
सहस्रनामधेयाय भास्कराय नमो नमः॥
नित्याय निरवद्याय निर्मलज्ञानमूर्तये ।
निगमार्थप्रकाशाय भास्कराय नमो नमः॥

आदिमध्यान्तशून्याय वेदवेदान्तवेदिने ।
नादबिन्दुस्वरूपाय भास्कराय नमो नमः॥
निर्मलज्ञानरूपाय रम्यतेजस्स्वरूपिणे ।
ब्रह्मतेजस्स्वरूपाय भास्कराय नमो नमः॥
नित्यज्ञानाय सत्याय निर्मलज्ञानमूर्तये ।
निगमार्थस्वरूपाय भास्कराय नमो नमः॥
कुष्ठव्याधिविनाशाय दुष्टव्याधिहराय च ।
इष्टार्थदायिने तस्मै भास्कराय नमो नमः॥
भवरोगैकवैद्याय सर्वरोगापहारिणे ।
एकनेत्रस्वरूपाय भास्कराय नमो नमः॥
दारिद्र्यदोषनाशाय घोरपापहराय च ।

दुष्टशिक्षणधुर्याय भास्कराय नमो नमः ॥
होमानुष्ठानदैवाय कालमृत्युहराय च ।
हिरण्यवर्णदेहाय भास्कराय नमो नमः ॥
सर्वसम्पत्प्रदात्रे च सर्वदुःखविनाशिने ।
सर्वोपद्रवनाशाय भास्कराय नमो नमः ॥
नमो धर्मनिधानाय नमः सुकृतसाक्षिणे ।
नमः प्रत्यक्षदेवाय भास्कराय नमो नमः ॥
सर्वलोकैकपूर्णाय कालकर्मोघहारिणे ।
नमः पुण्यस्वरूपाय भास्कराय नमो नमः ॥
द्वन्द्वव्याधिविनाशाय सर्वदुःखविनाशिने ।
नमस्तापत्रयघ्नाय भास्कराय नमो नमः ॥

कालरूपाय कल्याणमूर्तये कारणाय च ।
वैद्याय भवसंहर्त्रे भास्कराय नमो नमः॥

—— ० ——

॥ अथ गजेन्द्रकृता भगवत्स्तुतिः ॥ गजेन्द्रः –

ॐ नमो भगवते तस्मै यत एतच्चिदात्मकम् ।
पुरुषायादिबीजाय परेशायाभिधीमहि ॥
यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम् ।
योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयम्भुवम् ॥
यः स्वात्मनीदं निजमाययार्पितं क्वचिद्विभातं क्व च
तत्तिरोहितम् । अविद्धदृक् साक्ष्युभयं तदी-
क्षते स आत्ममूलोऽवतु मां परात्परः ॥

कालेन पञ्चत्वमितेषु कृत्स्नशो लोकेषु पालेषु च सर्वहेतुषु।
तमस्तदासीद्गहनं गभीरं यस्तस्य पारेऽभिविराजते प्रभुः॥
न यस्य देवा ऋषयः पदं विदुर्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम्।
यथा नटस्याकृतिभिर्विचेष्टतो दुरत्ययानुक्रमणः स मावतु ॥
दिदृक्षवो यस्य पदं सुमङ्गलं विमुक्तसङ्गा मुनयः सुसाधवः।
चरन्त्यलोकव्रतमव्रणं वने भूतात्मभूताः सुहृदः स मे गतिः॥
न विद्यते यस्य च जन्म कर्म वा न नामरूपे गुणदोष एव वा ।
तथापि लोकाप्ययसम्भवाय यः स्वमायया तन्यनुकालमृच्छति॥

तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये ।
अरूपायोरुरूपाय नम आश्चर्यकर्मणे ॥

नम आत्मप्रदीपाय साक्षिणे परमात्मने ।
नमो गिरां विदूराय मनसश्चेतसामपि ॥

सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता ।
नमः कैवल्यनाथाय निर्वाणसुखसंविदे ॥
नमः शान्ताय घोराय मूढाय गुणधर्मिणे ।
निर्विशेषाय साम्याय नमो ज्ञानघनाय च ॥
क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे ।
पुरुषायात्ममूलाय मूलप्रकृतये नमः ॥
सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे ।
असताच्छाययोक्ताय सदाभासाय ते नमः ॥
नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाय ।
सर्वागमाम्नायमहार्णवाय नमोऽपवर्गाय परायणाय ॥
गुणारणिच्छन्नचिदूष्मपाय तत्क्षोभविस्फूर्जितमानसाय ।
नैष्कर्म्यभावेन विवर्जितागमस्वयम्प्रकाशाय नमस्करोमि ॥

मादृक्प्रपन्नपशुपाशविमोक्षणाय मुक्ताय भूरिकरुणाय नमोऽ-
लयाय । स्वांशेन सर्वतनुभृन्मनसि प्रतीतप्रत्यग्दृशे
भगवते बृहते नमस्ते ॥ आत्मात्मजाप्तगृहवित्तजनेषु
सक्तैर्दुष्प्रापणाय गुणसङ्गविवर्जिताय । मुक्तात्मभिः स्व
हृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय ॥
यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नुवन्ति ।
किं त्वाशिषो रात्यपि देहमव्ययं करोतु मेऽदभ्रदयो विमोक्षणम् ॥
एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्नाः ।
अत्यद्भुतं तच्चरितं सुमङ्गलं गायन्त आनन्दसमुद्रमग्नाः ॥
तमक्षरं ब्रह्म परं परेशमव्यक्तमाध्यात्मिकयोगगम्यम् ।
अतीन्द्रियं सूक्ष्ममिवातिदूरमनन्तमाद्यं परिपूर्णमीडे ॥
यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः ।

नामरूपविभेदेन फल्ग्व्या च कलया कृताः ॥

यथार्चिषोऽग्नेः सवितुर्गभस्तयो निर्यान्ति संयान्त्यसकृत्स्वरोचिषः।
तथा यतोऽयं गुणसम्प्रवाहो बुद्धिर्मनःखानि शरीरसर्गाः ॥
स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान् न जन्तुः।
नायं गुणः कर्म न सन्न चासन् निषेधशेषो जयतादशेषः ॥
जिजीविषे नाहमिहामुया किमन्तर्बहिश्चावृतयेभयोन्या ।
इच्छामि कालेन न यस्य विप्लवस्तस्यात्मलोकावरणस्य मोक्षम् ॥

सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसम् ।
विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम् ॥
योगरन्धितकर्माणो हृदि योगविभाविते ।
योगिनो यं प्रपश्यन्ति योगेशं तं नतोऽस्म्यहम् ॥

नमो नमस्तुभ्यमसह्यवेगशक्तित्रयायाखिलधीगुणाय ।

नायं वेद स्वमात्मानं यच्छक्त्याहंधिया हतम्।
तं दुरत्ययमाहात्म्यं भगवन्तं नतोऽस्म्यहम्॥

श्रीशुक उवाच॥ एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः। नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत्॥ तं तद्वदार्तमुपलभ्य जगन्निवासः स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः। छन्दोमयेन गरुडेन समुह्यमानश्चक्रायुधोऽभ्यगमदाशु यतो गजेन्द्रः॥ सोऽन्तस्सरस्युरुबलेन गृहीत आर्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम्। उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रान्नारायणाखिलगुरो भगवन्नमस्ते॥
तं वीक्ष्य पीडितमजः सहसावतीर्य सग्राहमाशु सरसः कृपयोज्जहार।
ग्राहाद्विपाटितमुखादरिणा गजेन्द्रं सम्पश्यतां हरिरमूमुचदुस्त्रियाणाम्॥

— ० —

महाभारते वनपर्वणि मार्कण्डेयसमास्यायां कृतः प्रश्नः।

युधिष्ठिर उवाच। भगवन् श्रोतुमिच्छामि स्कन्दस्य च
महात्मनः। नामान्यस्य प्रभावं च लोकख्यातिं द्विजोत्तम॥
मार्कण्डेय उवाच। आग्नेयश्चैव स्कन्दश्च दीप्तकीर्तिरनामयः।
मयूरकेतुर्धर्मात्मा भूतेशो महिषार्दनः। कामजित्कामदः
कान्तः सत्यवाग्भुवनेश्वरः। शिशुः शीघ्रः शुचिश्चण्डो दीप्त
वर्णः शुभाननः। अमोघस्त्वनघो रौद्रः प्रियश्चन्द्राननस्तथा।
दीप्तशक्तिः प्रशान्तात्मा भद्रकुक्कुटमोहनः। षष्ठीप्रियश्च
धर्मात्मा पवित्रो मातृवत्सलः। कन्याभर्ता विभक्तश्च
स्वाहेयः कृत्तिकासुतः। प्रभुर्नेता विशाखश्च नैगमेयः
सुदुश्चरः। सुव्रतो ललितश्चैव बालक्रीडनकप्रियः।

खचारी ब्रह्मचारी च शूरः शरवणोद्भवः। विश्वामित्रप्रिय-
श्चैव देवसेनाप्रियस्तथा। वासुदेवप्रियश्चैव प्रियः प्रि-
यकृदेव तु ॥ नामान्येतानि दिव्यानि कार्तिकेयस्य यः
पठेत्। स्वर्गं कीर्तिं धनं चैव स लभेन्नात्र संशयः॥
स्तोष्यामि देवैर्ऋषिभिश्च जुष्टं शक्त्या गुहं नामभिरप्रमेयम्।
षडाननं शक्तिधरं सुवीरं निबोध चैतानि कुरुप्रवीर ॥
ब्रह्मण्यो वै ब्रह्मजो ब्रह्मविच्च ब्रह्मेशयो ब्रह्मवतां वरिष्ठः।
ब्रह्मप्रियो ब्राह्मणसर्वमन्त्री त्वं ब्रह्मणां ब्राह्मणानां च नेता ॥
स्वाहा स्वधा त्वं परमं पवित्रं मन्त्रस्तुतस्त्वं प्रथितः षडर्चिः।
संवत्सरस्त्वमृतवश्च षड्वै मासार्धमासाश्च दिनं दिशश्च।
त्वं पुष्कराक्षस्त्वरविन्दवक्त्रः सहस्रनेत्रोऽसि सहस्रबाहुः।

त्वं लोकपालः परमं हविश्च त्वं भावनः सर्वसुरासुराणाम् ॥
त्वमेव सेनाधिपतिः प्रचण्डः प्रभुर्विभुश्चाप्यथ शक्रजेता।
सहस्रपात्त्वं धरणी त्वमेव सहस्रतुष्टिश्च सहस्रभुक्च ॥
सहस्रशीर्षस्त्वमनन्तरूपः सहस्रपात्त्वं दशशक्तिधारी।
गाङ्गसुतस्त्वं स्वमतेन देव स्वाहामहीकृत्तिकानां तथैव ॥
त्वं क्रीडसे षण्मुख कुक्कुटेन यथेष्टनानाविधकामरूपी।
दीक्षासि सोमो मरुतः सदैव धर्मोऽसि वायुरचलेन्द्र इन्द्रः॥
सनातनानामपि शाश्वतस्त्वं प्रभुः प्रभूणामपि चोग्रधन्वा।
ऋतस्य कर्ता दितिजान्तकस्त्वं जेता रिपूणां प्रवरः सुराणाम् ॥
सूक्ष्मं तपस्तत्परमं त्वमेव परावरज्ञोऽसि परावरस्त्वम्।
धर्मस्य कामस्य परस्य चैव त्वत्तेजसा सर्वमिदं महात्मन् ॥

व्याप्तं जगत्सर्वसुरप्रवीर शक्त्या मया संस्तुत लोकनाथ।
नमोऽस्तु ते द्वादशनेत्रबाहो अतःपरं वेद्मि गतिं न तेऽहम्॥
स्कन्दस्य य इदं विप्रः पठेज्जन्म समाहितः। श्रावयेद्ब्रा-
ह्मणेभ्यो यः शृणुयाद्वा द्विजेरितम्॥ धनमायुर्यशो दी-
प्तं पुत्राञ्छत्रुजयं तथा। स पुष्टितुष्टी सम्प्राप्य स्कन्द
सालोक्यमाप्नुयात्॥ इति॥ श्री स्कन्दमहिमानुवर्णनम्॥

---- ० ----

महाकविश्री कालिदासकृता कुमारसम्भवकाव्यस्था स्तुतिः।

अथ सर्वस्य धातारं ते सर्वे सर्वतोमुखम्। वागी-
शं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे॥ नमस्त्रिमूर्तये
तुभ्यं प्राक्सृष्टेः केवलात्मने। गुणत्रयविभागाय पश्चाद्-
भेदमुपेयुषे॥ यदमोघमपामन्तरुप्तं बीजमज त्वया।

अतश्चराचरं विश्वं प्रभवस्तस्य गीयसे ॥ तिसृभिस्त्वम-
वस्थाभिर्महिमानमुदीरयन्। प्रलयस्थितिसर्गाणामेकः
कारणतां गतः॥ स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेः सि-
सृक्षया। प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ॥
स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य ते। यौ तु स्वप्ना-
वबोधौ तौ भूतानां प्रलयोदयौ॥ जगद्योनिरयोनिस्त्वं
जगदन्तो निरन्तकः। जगदादिरनादिस्त्वं जग-
दीशो निरीश्वरः॥ आत्मानमात्मना वेत्सि सृजस्या-
त्मानमात्मना। आत्मना कृतिना च त्वमात्मन्येव
प्रलीयसे॥ द्रवः सङ्घातकठिनः स्थूलः सूक्ष्मो लघु-
र्गुरुः। व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु॥
उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम्। कर्म

यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥ त्वामाम-
नन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् । तद्दर्शिनमुदा-
सीनं त्वामेव पुरुषं विदुः ॥ त्वं पितॄणामपि पिता
देवानामपि देवता । परतोऽपि परश्चासि विधाता
वेधसामपि ॥ त्वमेव हव्यं होता च भोज्यं भोक्ता च शा-
श्वतः । वेद्यं च वेदिता चासि ध्याता ध्येयं च यत्परम् ॥

योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां
सञ्जीवयत्यखिलशक्तिधरः स्वधाम्ना ।
अन्यांश्च हस्तचरणश्रवणत्वगादीन्
प्राणान्नमो भगवते पुरुषाय तस्मै ॥
यस्मादिदं जगदजायत यत्र तिष्ठ-
त्यन्ते समस्तमिदमस्तमुपैति यत्र ।
तस्मै नमः सदसदादिविकल्पशून्य-
चैतन्यमात्रवपुषे पुरुषोत्तमाय ॥